नियत्तो जेणाहं नियत्तामि त्ति। तउ भावं नाऊण मुक्को, गओ सपरिवारो गुरुसमीवं। ते वि पंचरायपुत्तसया लज्जाए कुलाभिमाणेण सच्चपइन्नत्तणउ गहियदिक्खा ठिया। पच्छा सव्वेसिं भावओ वि परिणया। अन्ने भणंति ते पंचसए सिस्सत्तेण काऊण सयमेव गुरुत्तेणं पडिवज्जितु अणुट्ठाणं काउं पयट्टो त्ति। तउ सो तिव्वसंवेगवसाउ अणुट्ठाणं काऊण सुगइं संपत्तो त्ति। तं च नाडयं विस्सकम्मुणा कुसुमपुरे नच्चियं। तत्थवि अणेगे लोगा पव्वइया। मा एवं पव्वयंता वच्चंतेहिं दिणेहिं सव्वे पव्वइस्संति त्ति। ता अम्हाणं रक्खगा न भविस्सति त्ति नागरएहिं तं नाडयं दड्ढंतित्ति। अयं मायापिण्डो यतीनामकल्प्यो, ग्लानक्षपकप्राघूर्णकस्थविरसङ्घकार्यादिप्रयोजनोत्पत्तौ चापवादेन गृह्यते। यद्यपि चात्र लोभवशादेव मायया विविधरूपकरणाल्लोभव्यापारोऽप्यस्ति, तथाप्यत्र प्राधान्येन मायाया एव विवक्षितत्वात्तद्व्यपदेशेनेदं ज्ञातं दर्शितं।

उक्तं मायापिण्डद्वारमथ लोभपिण्डद्वारं गाथापश्चार्द्धेनाह।

गिण्हिस्समिमं निद्धाइ, तो वहु अडइ लोभेण ॥६९॥

व्याख्या—अद्याहं ग्रहीष्ये आदास्ये लभ्यमानस्तु लोभधृष्टाद्यपेक्षया, इदं हृदयं कल्पनाप्रत्यक्षमपरं शोभनास्वादं तदेवाह। स्निग्धादि, सिंहकेसरमोदकघृतपूर्णप्रभृतिकमेवावधारणमध्याहार्यं, ततस्तस्मात्कारणादेतद् विचिन्त्येत्यर्थः। वहु प्रचुरं निजोदरपूर्तेर्वाधिकमटति गृहेषु भ्राम्यति केनेत्याह लोभेन रसगृद्ध्या, ततो लोभाध्यावसायवता साधुना यदीप्सितं लभ्यते तल्लोभपिण्डः स्यात् सिंहकेसरयतेरिव, यद्वक्ष्यति 'लोभे केसरयसाहु'त्ति। तदुदाहरणमपि स्वस्थानत्वादत्रैव ब्रूमः, तच्चेदं यथा—

'चंपाए खवगरिसी अहन्नया, मोयगूसओ जाओ। तं दट्ठुं पारणए-सो साहू गिण्हइ पइन्नं ॥१॥ जह अज्ज मया सव्वं सेसं अस-

णाइयं परिहरित्ता । विउलं पि लब्भमाणं, घेत्तव्वा मोयगा चेव ॥२॥ ते वि सिंहकेसर–नामा जे मोयगा इह पसिद्धा । सुबहुं पि भमिउं, ते घेत्तव्वा न उण सेसा ॥३॥ हियएण संपधारियमेवं लोलयाए सिग्घयरो । भिक्खट्ठमणुपविट्ठो, पुरिमड्ढं जाव परिअडिओ । ॥४॥ तेसिं अट्ठाय मुणी, तहवि न लद्धा इमेण ते कहविं । तो न य नियत्तिओ सो, गिहाणुगेहं परिब्भमइ ॥५॥ गेहंमि तउ पत्ते, तस्स दुवारे भणिज्जमाणस्स । ठाणे, उ धम्मलाभस्स सिंहकेसर य इइ भणइ ॥६॥ सयलं पि दिणमईयं, परिभमंतस्स जाव रयणीवि । संपत्ता नो नाया, पणट्ठचित्तेण किं बहुणा ॥७॥ रयणीए पहरदुगे, एवमडंतो कमेण संपत्तो । सावयगिहंमि एसोऽसत्थचित्तो (मोअग)त्ति ॥८॥ मुणिणो चोयणहेउं; वुत्तं तो सावगेण जह भयवं । पुच्चो नवत्ति एसो, जो पुरिमड्ढो मए य पकओ ॥९॥ कहसु तुमं जइ पुन्नो गंठिस्सहियं करेमि तस्सुवरि । जेणाहमिइ वुत्ते, पलोइयं साहुणा गयणं ॥१०॥ तो तारागणजुत्तो दिट्ठो गयणंमि निम्मलो चंदो । पच्चागयचित्तेणं तो नायं कालपरिमाणं ॥११॥ जह अड्ढरत्तसमओ, वट्टइ उवढतो यत्ततो जत्त विलसियं जायं (?) । लक्खियमेयं जह मम चोयणदाणत्थमेएण ॥१२॥ मग्गियमेयं पच्चक्खाणं तो मिच्छादुक्कडं देइ । भणियं च सावया ! संतिया, उ मे चोयणा दिन्ना ॥१३॥ तट्ठाणाउ नियत्तिय गंतूणं सुद्धथंडिले तओ । आगमभणियविहीए परिट्ठविंतस्स समियस्स ॥१४॥ सुद्धज्झवसाणपरस्स तस्स निद्दड्ढघाइकम्मस्स, सयलजगुज्जोयकरं केवलणाणं समुप्पन्नं ॥१५॥ इत्येवं लोभपिण्ड इति गाथार्थः ॥६९॥

अथ क्रोधादिपिण्डचतुष्टये उदाहरणसङ्ग्राहिणीं गाथामाह ।

**कोहे घेवरखवओ, माणे सेवइय खुड्डओ नायं । मायाएऽऽसाढभूई, लोभे केसरयसाहु त्ति ॥७०॥**

व्याख्या—क्रोधे क्रोधपिण्डे, मृतकार्यकृताः घृतपूर्णाः पक्वान्नविशेषास्तैरुपलक्षितः क्षपको मासक्षपणतपोविधायी यतिर्ज्ञातमिति

योगः। नेषामप्राप्तौ तस्य क्रोधभावात्। तथा माने मानपिण्डे सेवतिका राद्धाः श्लक्ष्णसेवा(वतिका)स्तदुपलक्षितः क्षुल्लको लघुव्रती ज्ञातं निदर्शनं वाच्यः। तासामलाभे तस्य मानभावात्। तथा मायायां मायापिण्डे आषाढभूतिनामा यतिर्ज्ञातं। तेन मोदकलाभमाश्रित्य मायाकरणात्। तथा लोभे लोभपिण्डे सूचनात् सिंहकेसरिकलड्डुकविशेषास्तत्र श्लक्ष्णीकृतेन गोदुग्धसिक्तेन रविकरशुष्कपिष्टेन परिशोधितखण्डसुरभिघृतयुक्तेन शृङ्गाटकफलचूर्णेन ये निष्पन्ना मोदकास्ते सिंहकेसरकशब्दवाच्या इत्याम्नायस्तदुपलक्षितः साधुर्यतिर्ज्ञातं वाच्यस्तानुद्दिश्य तेन लोभविधानादिति ज्ञातचतुष्टयवक्तव्यतासमाप्त्यर्थं, इति गाथाक्षरार्थः। भावार्थस्तु कथानकगम्यस्तानि तु पूर्वं स्वस्थान एव कथितानीति गाथार्थः ॥७०॥

उक्तं क्रोधादिपिण्डचतुष्टयं सोदाहरणमथ संस्तवकरणद्वारमाह—

**थुणणे संबंधि संथवो दुहा सो, य पुव्व पच्छा वा। दायारं दाणाउ, पुव्वं पच्छा व जं थुणइ ॥७१॥**

व्याख्या—इह संस्तवशब्दः श्लाघायां परिचये च वर्तते, इत्यर्थद्वयवृत्तिरपि गृह्यते, इत्याह 'थुणणे संबंधि'त्ति तत्र स्तवने गुणस्तुतौ, 'संबंधि' त्ति विभक्तिलोपात्सम्बन्धिनि मात्रादिनात्रकघटनया स्वाजन्यकरणे इत्येवं श्लाघापरिचयभेदात् संस्तवो द्विधा द्विभेदः स्यात्। गुणसंस्तवः सम्बन्धिसंस्तवश्चेत्यर्थः। स च पुनरेकैकः संस्तवो द्विभेदः स्यात्। कथमित्याह। 'पुव्व पच्छा व'त्ति विभक्तिलोपात् पूर्व्वं पूर्वसंस्तव इत्यर्थः। तथा पश्चादिति पश्चात्संस्तव इत्यर्थः। वा विकल्पे। अथ पूर्व्वपश्चाद्भेदेन द्विविधमपि गुणसंस्तवं व्याख्यातुमाह। 'दायारमित्यादि' दातारं दायकं दानाद्देयवितरणात् पूर्व्वं प्रथमं देयेऽलब्धे सतीत्यर्थः तथा पच्छावत्ति दानात् पश्चाद्दानोत्तरकालं देये लब्धे सतीत्यर्थः। वा विकल्पार्थो, यत् स्तौति वर्णयति स पूर्वसंस्तवः पश्चात्संस्तवश्च। तत्र भिक्षार्थं

प्रविष्टः साधुरीश्वरादिकं कमपि दातारं यद्दानात् पूर्वं सत्यासत्यैरौदार्यादिभिर्गुणैः स्तौति यथा अहो ! योऽस्माभिर्दानपतिः पूर्व्वं वार्त्तामात्रेणैव श्रुतः सोऽद्य प्रत्यक्षमवलोकितस्तथा नेदृशा औदार्यादयो गुणा अपरस्य श्रूयन्ते। तथा धन्यस्त्वं यस्येदृशा गुणाः सर्वत्राप्रतिस्खलिता दिग्वलयव्यापिनः प्रसरन्तीति स पूर्वगुणसंस्तवः । तथा दाने दत्ते यत्संस्तौति यथा निजदर्शनेन त्वयाद्यास्मल्लोचने विमलीकृते यतो गुणिदर्शने किल प्रतीतिजनकत्वेन चक्षुषी निर्म्मले स्यातामिति नेदमद्भुतं तथा तव गुणश्रवणं सत्यतया सञ्जातं । यत्त्वद्दर्शनात् पूर्व्वमेवंविधगुणः स श्रूयते तत् किं सत्यमसत्यं वेति शङ्का ममासीत्, साम्प्रतं त्वद्दर्शनाद्यथाभूतः श्रुतस्तथाभूतस्यैव दर्शनान्निःशङ्कितं सम्पन्नमिति स पश्चाद्गुणसंस्तव इति। उभयरूपेऽपि चात्र मायामृषावादासंयतानुमोदनादयो दोषा वाच्या इति गाथार्थः ॥७१॥

अथ सम्बन्धिसंस्तवं पूर्वपश्चाद्भेदेन द्विविधमिति वक्तुमाह ।

**जणणिजणगाइ पुव्वं, पच्छा सासुससुरयाइ जं च जई। आयपरवयं नाउं, संबंधं कुणइ तदणुगुणं ॥७२॥**

व्याख्या—जननीजनकौ मातापितरावादी प्रथमौ यस्य भगिनीभ्रात्रादिसम्बन्धस्य स सम्बन्धसम्बन्धिनोरभेदोपचाराज्जननीजनकादिसम्बन्धः स किमित्याह। 'पुव्वं'ति, पूर्व्वसंस्तवः स्यात् जनन्यादीनां पूर्व्वकालभावित्वात् । तथा 'पच्छ'त्ति, पश्चात्संस्तवः स्यात् क इत्याह श्वश्रूश्वशुरादिः इहापि सम्बन्धतद्वतोरभेदात् श्वश्रूश्वशुरौ भार्यादेर्मातापितरौ तावादीयस्य कलत्रपुत्रशालकादिसम्बन्धस्य स तथेति । एवं पूर्वपश्चाद्भेदेन सम्बन्धिसंस्तवस्वरूपमभिधाय यथा यतिस्तं द्विविधमपि करोति तथाह–'जं चे'त्यादि, चशब्दः सम्बन्धद्वयापेक्षया समुच्चयार्थः । ततश्च यं कञ्चन सम्बन्धं करोतीति योगः यतिः साधुः । किं कृत्वेत्याह आत्मपरौ प्रतीतौ

तयोर्वयस्तारुण्यवृद्धादिलक्षणकालकृता शरीरावस्थात्मपरवयस्तज्ज्ञात्वा अवबुध्य, किमित्याह सम्बन्धपरिचयं, पूर्वकालभाविमात्रादिनात्रकघटनां पश्चात्कालभाविश्वश्र्वादिनात्रकयोजनां वा कुरुते भिक्षार्थं गृहे गतो गृहिणा सहाहारादिलिप्सया विधत्ते। कीदृशं सम्बन्धं करोतीति आह 'तदनुगुणमि'ति तयोरात्मपरवयसोरनुगुणमनुरूपं स जनन्यादिनात्रकघटनारूपः सम्बन्धः पूर्वसम्बन्धिसंस्तवो ज्ञेय इति प्रक्रमः। श्वश्र्वादिसम्बन्धश्च पश्चात्सम्बन्धिसंस्तव इति। कथं पुनरसौ स्वपरवयो ज्ञात्वा तदनुगुणं सम्बन्धं कुरुते? उच्यते, यथा कश्चित् साधुर्भिक्षाद्यर्थं कस्मिंश्चिद् गृहे प्रविशति, ततः काञ्चिन्निजमात्रादिसमानामृर्ज्वीं दात्रीमवेक्ष्याहारादिलम्पटतया मातृत्वादिघटनार्थं मातृस्थानेनाधृतिपूर्वकं गलदश्रूणी लोचने कर्तुमारभते ततस्तया किं त्वमीदृशो दृश्यसे इति पृष्टः सन् सम्बन्धघटनार्थं सगद्गदं वदति यथा मम त्वत्सदृशी मात्राद्याऽभूदिति। तत्र यदि स्वयं तरुणो दात्री तु मध्यवया वृद्धा वा तदा ममेदृशी माता श्वश्रूर्वाऽस्ति स्मेति जल्पति यदि च स्वयं सा च समानवयास्तदा ममेदृशी स्वसा भार्या वा बभूवेति वदति, यदि च स्वयं मध्यमवयाः सा तु तरुणी तदा ममेदृशी पुत्र्यभूदिति भाषते। यदि स्वयं वृद्धः सा च तरुणी बाला वा तदा ममेदृशी दौहित्री पौत्रिकादिर्वासीदिति जल्पति। तदत्र संस्तवकरणेनोपार्जितः पिण्डः संस्तवपिण्ड इत्युच्यते। इहापि च मायामृषावादादयो दोषा वाच्याः। तथा परस्परं स्नेहवृद्धिवशात् मृतपुत्रस्य स्थाने अयमपि स्यादित्यभिप्रायेण मातृभावप्रतिपन्ना दात्री तस्मै विधवानिजवधूमन्यां दास्यादिकां (वा) कदाचिद्दद्यादिति भद्रकदात्रीं प्रति दोषः। यदि च प्रत्यनीका सा स्यात्तदाऽयं कार्पटिकप्रायोप्यस्मान् जनन्यादितया कल्पयतीत्यस्मदपभ्राजनाकार्यसाविति विचिन्त्य ग्रामादेर्निष्कासनादि कुर्यादिति। तथा या तेन श्वश्रूः प्रतिपन्ना सा तस्मै स्नेहवशात् मृतादिजामातृकस्थानेऽयमपि भवत्वित्यभिप्रायेण विधवानिजपुत्रीं कुरण्डां वा दद्यात्, या च तेन भार्यात्वेन कल्पिता तस्या यदि

भर्ता समीपस्थः कथञ्चित्तद्वचः शृणुयात्तदा मम भार्याऽनेन स्वभार्या कल्पिता तत्तथैव भवत्विति विचिन्त्य (श्रुत्वा) तयाप्यात्मना सहागो सम्भोगं कार्यत इति गाथार्थः ॥७२॥

उक्तं संस्तवपिण्डद्वारमथ विद्यामन्त्रचूर्णपिण्डाख्यद्वारत्रयं तल्लक्षणकथनद्वारेण व्याचिख्यासुराह ।

**साहणजुत्ता थीदेवया व विज्जा विवज्जए मंतो। अंतद्धाणाइ फला चुन्ना नयणंजणाइया ॥७३॥**

व्याख्या—साधनयुक्ता धरादिजपबल्यक्षतादिपूजोपचारान्विता यद्वा स्त्री प्रज्ञप्त्यादिका देवताऽधिष्ठात्री यस्याः सा स्त्रीदेवता। स्त्रीरूपदेवताधिष्ठानेत्यर्थो, वा विकल्पे। ओमित्याद्यक्षरपद्धतिः। किमित्याह 'विज्जे'ति विद्याशब्दव्यपदेशादिति शेषाद्व्यापारणं च(?) दोषरतेन लब्धः पिण्डो विद्यापिण्ड इति। तथा 'विवज्जए मंतो'त्ति। तत्र विपर्यये साधनस्त्रीदेवतायुक्तत्वस्वरूपविद्यालक्षणवैपरीत्ये भावे सतीति यावन्मन्त्रः स्यात् कोऽर्थोऽसाधनः पुरुषरूपदेवताधिष्ठित ॐकारादिवर्णात्मक एव मन्त्रो भवतीति तत्प्रयोगेण लब्धः पिण्डो मन्त्रपिण्डः तथान्तर्द्धानमदृश्यभवनमादिशब्दात् वशीकरणादिग्रहस्ततोऽन्तर्द्धानादिफलं कार्यं तेषां ते तथोक्ताः। चूर्णा द्रव्यक्षोदरूपाः। के पुनस्ते इत्याह। नयनाञ्जनादय इति द्रव्यसमूहनिष्पन्ननेत्रोपलेपनललाटतिलकादिक्रियाहेतवस्तद्व्यापारणेन लब्धः पिण्डश्चूर्णपिण्डः स्यादत्र च विद्यापिण्डे भिक्षूपासकदृष्टान्तो वाच्यो यथा—

गधसमिद्धं नाम नयरं होत्था। तत्थन्नया सद्धम्मकप्पतरुणो केइ आयरिया समोसढा। तत्थ एगो भिक्खूवासओ, ईसरो सो य साहूण भिक्खट्ठा गिहागयाणं न किंचि देइ। अन्नया य साहूणमेगत्थमिलियाण समुल्लाओ जाओ। जहा एसो भिक्खूवासओ ईसरो वि साहूणं न किंचि देई। ता अत्थि कोई जो एयं घयाइयं दवावेइ। तेसिं मज्झाउ एगेण साहूणा भणियं। जहामं

आगह जेणाहं दव्वावेमि । अणुण्णाओ गओ तस्स गेहं अभिमंतिओ सो विज्जाए तेण घयगुलाइयं पउरं साहुणो दिन्नं, साहू वि विज्जं संहरित्ता सट्ठाणमागओ विज्जाए पडिसाहरियाए सहावत्थो जाओ गेहे घयगुलायाइ थेवाइं पासइ, जाव केण हियं मे घयाइ केण मुट्ठोमित्ति पलविउं विलग्गोत्ति ।

मन्त्रपिण्डे शालिवाहनराजप्रदी(पादलि)प्तकाचार्यदृष्टान्तो वाच्यो नवरं प्रायो बहुजनप्रसिद्धाद्विनेयजनानुग्रहाय यथाम्नायमादितः पादलिप्ताचार्यचरितं किञ्चिदिहोच्यते । तच्चेदम्—

जिणवयणरहस्सजाणकुसला कोमलापुरी नाम नयरी होत्था । तत्थ य जिणवयणसवणजायहरिसुप्फुल्लो फुल्लो नाम सेट्ठी । तस्स य वण्णजपडिमा पडिमा नाम भारिया इउय सव्वमत्थि तेसिं न उण पुत्तो । तदत्थं च वइरोट्टं देवयं सा पोसहसालाए गंतूण चत्त-मयलवावारा पोसहेण धम्मजागरियं करेमाणी आराहिउं पयट्टा । तउ सा देवी तब्भत्तिरंजिया समागया पुत्ते देहि त्ति भणिए भणइ य वच्छे ! बहवे तुज्झ होत्थाहि त्ति परमज्जेव विग्घविग्घायणत्थं विसुद्धभावेण तए इहेव नयरे विहरमाणाणं नागहत्थिसूरीणं बहिया-समागयाणं पायपक्खालणजलं पिबेयव्वं ति भणिऊण गया सट्ठाणं देवी, तउ गोसकिच्चं काऊण पडिमा पढमपहरसमए तेसिं वसहीए संपट्ठिया एगो वसहीमाणीए य साहू बहियागयाणं सूरीणं पायसोयजलपरिट्ठवणत्थं निग्गओ दिट्ठो । सो तीए पुट्ठो किमेयंति । तेण य भणियं सूरिपायजलं, तीए तं से मग्गिऊण तत्थेव पीयंति । तओ वसहिमज्झे गया सूरीणं वंदणवडियाए । तत्थ य ते दसासु-यखंधं परावत्तयंतो दिट्ठा वंदिया य परमभत्तीए तेहिं सा धम्मलाभेहिं वुत्ता केण निमित्तेण तुममेत्थ एगागिणी समागया ? । तीए सव्वं देवयाउवइट्टं सुयभवणहेउयं पायसोयजलपाणाइयं कहियं । तउ सूरिहि सुओवओगं दाऊण वुत्तं भविस्सति तुज्झ बहवे पुत्ता

'परं पढमो पुत्तो दसण्हं वरिसाणमुवरिं जउणानदीए परउ चिट्ठंतो जीविही न अन्नहा। एवं निसम्म तीए वुत्त जेट्ठपुत्तमहं तुब्भं दाहामि त्ति। सूरीहि वुत्तं जइ एवं तो अम्हे चिरजीवियं करिस्सामो। ततो सा एवं होउ त्ति भणिऊण नियगेहे गया, सेट्ठिणो य तं सव्वं साहियं। तउ तीए चेव रयणीए रयणमओ नागो सुमिणे पविस्संतो मुहे दिट्ठो। पडिबुद्धाए य सो सुमिणो दइयस्स साहिओ तेण वुत्तं गुणप्पवरो पिए! तुह पुत्तो होही गब्भे य परिवड्ढमाणे इमो दोहलो तीए जाओ जहा जइ हं, ससणिद्धसेलकाणणाइट्ठाणे सुबहुं दीणाणाहाइयाणं दाणं देमि त्ति। सेट्ठिणो य तीए कहिओ, तेण य सविसेसतरो सो पुरीओ। तउ नियसमए सव्वंगलक्खणो-ववेयं पुत्तं पडिमा पसूया। सेट्ठिणा अ वद्धावणाइयं कारियं। तउ मासे संपुन्ने सुमिणाणुसारेण जहा एयंमि गब्भगए सुमिणो नागो दिट्ठो तम्हा एसो नागिंदोत्ति तस्स नामं कयं। तउ सूरीवसहीए नेऊण इमं सीसं गिण्हत्ति भणिऊण सो तेसिं समप्पिओ तउ तं सव्वलक्खणगुणोववेयं दट्ठूण वुत्तं सूरीहिं। जहा एस जुगप्पहाणो पवयणपुरिसो होहित्ति। ता तुब्भेहिं एस महाजत्तेण रक्खेयव्वो जाव अट्ठवरिसो होइ त्ति। तेहिं तहेव तं सव्वं कयंति। तं च पइदिणं साहुवसहीए माया नेइ। पढंते गुणंते य साहुणो निसुणेइ अव-धारेइ य। इउ य सा पडिमा अन्नेवि बहुपुत्ते सव्वलक्खणधरे देवकुमारोवमे कुलुद्धरणे पसूया। सो य नागेंदो अट्ठवरिसिओ संतो सूरीहि सोहणदिणे विहिणा पव्वाविओ। तउ सो अन्नदिणे खुड्डओ आसन्नगिहाउ चउत्थरसियं घेत्तूं समागओ। गुरूणं पुरो ठिओ तेहिं वुत्तो इमं आलोइयं जाणसि नव त्ति। तेण वुत्तं अ(तु)ज्झपसाएण जाणामि। जइ एवं ता भणसु, ततो तेणिमं वुत्त, जहा अंबं तंबत्थीए अपुप्फियं पुप्फदंतपंतीए। नवसालिकंजियं नववहूए कुडएण मे दिन्नं ॥१॥ इमं गाहं सुणिऊण सूरीहि वुत्तं भो भो मुणिणो पेच्छह पेच्छह अहो एसो खुड्डो सिंगारग्गिणा पलित्तो त्ति। तउ खुड्डएण नमिउं वुत्तं। भयवं काणेण पसायं कुणह जेण पालित्तो

होमि त्ति एवं तेण वुत्ते गुरुमइचमविक्कएण गुरुणा आसणे निवेसिय सो सायरमेवं पुट्ठो, किं तुमं किंपि छंदाइयं जाणसि त्ति। तउ तेण बालभावाउ आरब्भ साहुसेवापरेण वागरणच्छंदलंकाराइयं सव्वमवधारियं गुरुणो निवेइयं। अवि य-जं किंचि सुयं दिट्ठं, पण्हामेहागुणेण तं सयलं। साहइ सनिम्मियं पिव पालित्तो सुकयसंपुन्नो॥१॥ तउ सूरी समुदायं मेलिऊण तस्स इणमेव नामं पइट्ठियं, जेण एसो गुणपगरिसेण आलित्तो तेण होउ इमस्स नामं पालित्तो त्ति। तहा भणियं अम्हवयणाउ अज्जपभिइ तुब्भेहि सव्वायरेण उवयरियव्वो। समुदायेण वि तं सूरिवयणं तहत्ति पडिवज्जियं। तउ गुरुणा जोग्गो एस सयलसुत्तत्थाणं ति नाऊण भावोवहाणरूवेण उस्सारणकप्पेण सव्वाणि तस्स ताणि अणुन्नायाणि। तउ सूरीहि अट्ठवरिसो वि सो संघसमेएण महापमोएण निय-पए ठाविओ कयं च से नामं पालित्तयसूरि त्ति। संघो भणिओ जहा अम्हे जंघाबलपरिहीणा अन्नत्थविहारं काउमसमत्था। एसो बालो वि पालित्तसूरी अईव संघपुरीट्ठो जउणा नईए आराया एयस्स संपयं अकुसलं। ता एयस्स विहारं अणुजाणे संघो। जेणेमं महु-राए देववंदणत्थं पेसेमि। एवं च सूरिवयणं निसुणिय संघेण चिंतियं जहा न एए पवयणपुरिसा निक्कारणमन्नहा जंपंति। तउ सूरि-पसिणाउ अकहियं पि किलेयं नज्जइ, जत्थेसो पालित्तसूरी विहरिस्सइ तत्थ नूणं संघस्स परा समुन्नइ भविस्सइ त्ति। ता जामोऽम्हे वि अणेण सद्धिं तत्थ जत्ताए। तउ इणमत्थं सूरीणं निवेइऊण वडतरो संघो तेण समं संपट्ठिओ। तउ सूरीहि पालित्तसूरी भणिओ जहा मगमप्पमाइणा होइयव्वं, संघकज्जेसु पुण विसेसउ वच्छल्लपरेण भवियव्वं। तउ सो संघजुओ संपत्तो महुरापुरीए। वंदेइ य देवनिम्मियं रम्मं थूभं अण्णे य चेइयं ति। तउ सूरी संघेण समं चलिओ। पत्तो कमेण चोंकारपुरे ठिओ सूरी तत्थ कइवयदि-णाणि। संघो य मट्ठाणं गओ। अह अन्नदिवसे भिक्खासरीरचिंताइकज्जे गएसु सव्वसाहूसु तव्वेलं च सावयाइविरहे य बालभावत्त-

णउ डिंभे दट्ठूण समुप्पन्नरमणवंछो चिलिमिलिं कडीए गोवित्तुं वसहीपच्चासन्नठिएहिं डिंभेहि समं रमिउं लग्गो। एत्थन्तरं अच्चब्भुयगुणपसरं तस्स सोऊण कुओ वि ठाणाउ तस्स वंदणत्थं के वि सावया अप्पुव्वा आगया तेहिं ते डिंभा पुट्ठा जहा भो कत्थ पालित्तसूरिस्स वसहि त्ति। तेण य ते विन्नाया जहा एए सावयत्ति। तउ तेसिं सूरिणा भमाडेणं वसहीमग्गो कहिओ। जाव ते आगच्छंति ताव‍प्पणा आसन्नमग्गेण गंतूण आयारं संवरिऊण निययासणे उवविट्ठो। तउ समागया ते सड्ढा। वंदिऊण सूरिं पूच्छिय सुहविहाराई विम्हियचित्ता विन्नाय तच्चेट्ठा तप्पुरओ उववि‌ट्ठा। चिंतियं च तेहिं कहं तं डिम्भचरियं कहं च एरिसं पहुत्तणं ति। ए ' तेसि सूरिणा भावं नेऊण भणिया ते भो एयं बालत्तणचेट्ठियं न कोट्ठए छोढुं पारिज्जइ। चंचलं च चित्तं जीवाणं, कीसण्णहा परिणयवयाणवि तुम्हाणं सया निक्कलंको नियओ धम्मो एसो न निव्वहइ। ता मा एयं चोज्जं मन्नह त्ति। तउ ते, उवलक्खिओ सूरीहि अम्ह भावो त्ति, हिट्ठमणा केच्चिरं कालं तं पज्जुवासिऊण सट्ठाणं गया। पुणो वि कयाइ सूरी जंतसगडभरं पिच्छिऊण निव्वियणं च नाऊण उप्पन्नरमणवंछो वसहीउ निग्गंतूण डिंभेहि समं सगडपिंगेसु चडणउयरणकीलाए कीडिउ माढत्तो। एत्थंतरे केहिं वि अपुव्वपुरिसेहिं आगंतूण ते डिंभा पुट्ठा जह कत्थ भो पालित्तयपंडीअस्स वसहि त्ति। ततो केइ एए विउसत्ति सूरिणा लक्खिऊण भमाडेण तेसिं वसहिमग्गं कहिउं पच्चासन्नमग्गेण सयं सट्ठाणमागओ। तउ निययासणे पच्छयपडयं लुलंतं पंगरिऊण अलियनिद्दाए ठिओ। एत्थंतरे ते पत्ता वसहिदुवारे, तं दट्ठूण उवलक्खिऊण य, तस्स धरिसणत्थं कुक्कुडसद्दं करेमाणा वसहीए पविसिउमारद्धा। सूरिणा वि तेसिं धरिसणत्थं तस्सद्दविरोही विरालियाए सद्दो माउंति तस्सद्दाणंतर सिग्घं पकओ तउ नायं तेहिं दुद्धरिसो एसो। तउ सूरिचलणे पणमिय ठिया ते पंडिया, गोट्ठीए इमं च पुट्ठो,

जहा पालित्तय ! कहसु फुडं सयलं महिमंडलं भमंतेण। दिट्ठो सुओव कत्थ य. चंदणरससीयलो अग्गी ? ॥१॥ तव्वयणाणंतरं अग्गिणो सीयलत्तं दिट्ठं सुयं च अणुहवपमाणसिद्धं, भणियं सूरिणा, जहा–अयसाभिओगसंदुमियस्स पुरिसस्स सुद्धहिययस्स। होइ वहंतस्स फुडं चंदणरससीयलो अग्गी ॥१॥ (ग्रं० ३०००)। तउ तेहिं वुत्तं अहो सूरिणो जए निरुवमा कीत्ती निम्मलं च जसो विप्फुरइ। जोग्गं च तेसिं नाऊण सूरिणा संसारा निव्वाइया सद्धम्मदेसणा कया, जहा–दीहरफणिंदनाले महिहरकेसरदिसामुहदलिल्ले। उप्पियइ कालभमरो जणमयरंदं पुहइपउमे ॥१॥ तउ संसाराउ निविन्ना केइ समणा जाया, केई सावयत्ति। एवं सो सूरी सेत्तुंजपउज्झिताइणि तित्थाणि वंदिऊण कमेण विहरंतो सिरिमन्नयखेडनयरे पत्तो। साइसयमइप्पगरिसवसा तत्थ सो चउसु पाहुडेसु कुसलो संपत्तो ताणीमाणि, जोणीपाहुडं निमित्तपाहुडं विज्जापाहुडं सिद्धपाहुडं। तत्थ पढमे सव्वदव्वसंयोगेण जीवाजीवुपत्ती वन्निज्जइ। बीए पुण सउणजोइस–केवललियामाइयं (?) निमित्तं सुत्तिज्जइ। तइए उ, रायविज्जाउ मंताउ य निरूविज्जंति। चउत्थे सिद्धाइवियारो त्ति। एएसु चउसु वि सुरी कुसलो जाओ, सो तद्दरिसावणं विना णिव्वुइं न लहइ। तत्थ मन्नयखेडपुरराया दुराराहो वि सूरिगुणावज्जियहियओ संघस्स अवगारं न किंपि करेइ। तउ तयनयरसंघो तेसिं अन्नत्थ विहरिउं न देइ। तउ अत्थि सोरट्ठदेसे धाउव्वायसिद्धो ढंकणगोपरि ढंकनगरनिवासी नागज्जुणो नाम वंदओ। तेन य सोरट्ठदेसवासी रायामच्चाइओ लोगो दाणसंमाणाइणा वसीकओ। सेसदरिसणाइ निप्पभावाइ सो अभिमन्नइ। तम्मिय समए भरुयच्छे महुरापुरीए जिणंदण्हवणपूयाइणं धिज्जाइया विग्घं करेंति। इमं च भरुयच्छाइसंघेण वासारत्तमज्झे गंतूण सव्वं सूरीणं निवेइयं। तउ सूरीहिं आइट्ठं, कायव्वो तुब्भेहिं दीवुस्सवदिणाउ बीए सुद्धकत्तियपडिवयदिणे भरियरियापव्वाभिहाणंमि महामहूसवो चेइयहरेसु। तम्मि दिवसे अम्हे संघं आपुच्छिऊण अमुगाए

वेलाए तत्थागमिस्सामो त्ति। तउ भणियदिवसे भणियवेलाए पायलेवं काऊण कइवयजणसहिओ भरुयच्छे संपत्तो सूरी। पारद्धो वद्धइ महूसवो अ, सावगेहिं चेइहरे। दिट्ठो य सूरी हरिसनिब्भरेणं संघेणं चेईमज्झायाओ। तउ तुट्ठेणं निस्संकं तस्सागमणे पंचमहासद्दो अप्फालिओ। विहिया सव्वा पडिवत्ती, उवविट्ठो तत्थ सूरी, तउ तस्साणुभावेण जंगमतित्थमिहागयं ति लोगप्पवाएण(सोउण)राया वि तत्थ गओ। राइणा आणंदिएण संघेण सेसलोएण य वत्थाइएहिं सूरी पूइओ, तं च सव्वं तेण अत्थीणं बंभणाइयाणं दिन्नं। उच्छलिओ साहूकारो नयरमज्झे। तउ सूरिं नमिऊण सविणयं राया जंपइ किं तुब्भे एत्तियं कालं नावलोइय त्ति। सूरिणा वुत्तं महाराय! इह विहरिउकामावि मण्णयखेडसंघेण नो मुक्का। संघाइक्कमणं च अम्ह सासणे महादोपयरं वण्णिज्जइ। अज्ज पुण अम्हेहिं तित्थाणं वंदणत्थं संघो विन्नतो। तेण भणिया जइ दिवसस्स पहरदुग्गसमए पुणो वि एत्थागंतूण भोयणं तुब्भे करेह तो वच्चह नो अन्नह त्ति। तं च अम्हेहिं पडिवन्नं। तउ महाराय! सेत्तुंजयमहुरतित्थेसु देवे अभिवंदिय पुणोवि तत्थ अम्हेहि गन्तव्वं। इमं च निसुणिय राया चलणेसु लग्गिऊण सूरीण सगग्गयं भणइ–जइवि तुम्ह निरंतरदंसणस्स अहो(म्ह)न जोगो तहावि कल्लदिणाउ आरब्भ, एयंमि जिणमंदिरे जात्तपुन्निमं ताव जत्तं गुरुपसाएणाहं करिस्सामि। ता जइ तुब्भे इहागच्छह तो अहं अप्पाणं सकयत्थं मन्नेमि इहरा मे जीवियं निप्फलं ति। तउ सूरिणा वुत्तं भो महायस! पवयणुन्नइ तए सयं कायव्वा। तुज्झसम्मयं एयं पकरिस्सामो एयं वुत्ते राइणा वुत्तं, परमो एस अम्हं अणुग्गहो त्ति। तउ तट्ठाणाउ सूरी दंसणसमुन्नइकरणत्थं वलहीपुरिं गओ। तउ सेतुंज्जे उज्जितेगिरिनयरे य देवे अभिवंदिय ढंकपुरे दंसणपभावणत्थं संपत्तो। तत्थ य नागज्जुणो वंदओ सूरिं समागयं जाणिऊण केईदूरे सूरिसमीवे समागउं विणएणं सूरिं मन्नावित्ता तेण नियए आसमे नीओ। काराविय सूरीणं चलणसोयं ति। भणियं बहुमाणपुव्वयं तेण जाया अम्ह तुम्ह

दंमणेण परमा चित्तनिव्वुई। ता इहासमे आगंतूण कोमुइ जाव मए सद्धिं निगए चेइहरे तुब्भेहिं गंतव्वं। तस्सेयं वयणं मन्निऊण सूरी महुराए गओ। ततो तत्थ पवयणुन्नइं काउं गओ मन्नयखेडे। एवमणुदिनं भरुयच्छाइमज्झेण कोमुई जाव आगच्छंतस्स सूरिस्स ढंकपुरे पइदिणं पायसोयजलं जिग्घंतेण मइमया नागज्जुणेण पायलेवदव्वाणं सचोत्तरं मूलसयं विन्नायं, न उण एक्कं तंदुलधोयणं ति। तउ तव्विग्गहउ कओ तेण पयलेवो। तउ तप्पभावेण सो किंचि उप्फिडित्तु पुणो पुणो पडंतो जज्जरियंगो जाओ। तहाविहं च दट्टुं पुन्निममहूसवागएण सूरिणा सो पुट्ठो किमेरिसो दीससित्ति। तेणावि सव्वो वइयरो सिट्ठो। तउ सब्भावं गोवंतेण सूरिणा भणियं मोहणं तए सव्वं विन्नायं। नवरं न एत्थ एको सेयभिक्खुदरिसणयोगो मिलिउ त्ति तं सोऊण चित्ते चमक्किओ तज्जो-यजाणणत्थं तेण सूरी भणिओ। धाउव्वायसिद्धिं तुमं ममाउ गिण्हसु नियजोगं च कहसु त्ति। तउ जाणिस्सामो त्ति भणिऊण सूरी चलिओ सट्ठाणसंमुहं। सूरियागमणस्स चरिमदिवसो कोमुईलक्खणो एसो त्ति कलिऊणं अणुवयणत्थं सूरिस्स सो वंदओ सूरिणा ममं चलिओ। अह ढंकपुरस्स वाहिं पच्चंतमिट्टवायं दट्टूण सूरिणा तस्सुवरिं चुन्नो खित्तो। तउ सूरिणा भणिओ वंदओ बीयदिणे तए एस जोएयव्वो त्ति। एवं भणिऊणं तं तट्ठाणाउ नियत्तिय गओ सट्ठाणं सूरी, निहालिओ गंतूण तेण बीयदिणे जाव सव्वं तं सुवण्णमयं पासइ। इउय अत्थि गोलानईतीरुपरिट्ठियं सयलपुरगुणड्ढाणं पइट्ठानं नाम नयरं। तत्थ य बलबुद्धिजुत्तो सालि-वाहणो नाम राया सो य वसीकयासेसरायवग्गो सत्थकव्वाइजुज्जए य पयं विउसाणं। जउ भणियं। 'काव्यशास्त्रविनोदेन, कालो गच्छति धीमताम्। व्यसनेन तु मूर्खाणां निद्रया कलहेन वा'॥१॥ इति। अन्नया वियड्ढविउसजणपुरियाए रायपरिसाए विउमजण-पमंमावसरे दंमणपभावणाकरणत्थं राइणो समीवे उवविट्ठाए भोगवईनामियाए पिंडवारविलासिणीए जिणमयभावियत्तणउ परमसावि-

याए जंपियं। जहा देव! ताव ससिव्व सव्वे विउसा अहंमाणिणो नियगुणुक्करिसविप्फुरियपयावा रेहंति जाव सूरोव्व पालित्तयसूरी निरुवमगुणकिरणो न अज्जवि विप्फुरइ,पढियं च तीए-तत्तावदेव शशिनः स्फुरितं महो यावन्न तीक्ष्णरुचिर्मण्डलमभ्युदेति। अभ्युद्गते सकलधामनि द्यौ तु तस्मिन्निन्दोः सिताभ्रशकलस्य च को विशेषः ॥१। ततो सुणिऊणेमं राइणा भणियं भद्दे! को एस सूरोवमो पालित्तयसूरी तए वन्निओ। तउ तीए सवित्थरो सव्वो सूरिवुत्तंतो तस्स कहिओ। त च सोऊण विम्हिओ राया भणइ कत्थ सो चिट्ठइ। तीए जंपियं सिरिमन्नयखेडे नयरे, तं निसुणिय सूरिसमाणयणत्थं राइणा संकरो नाम संधिविग्गहिओ तत्थ आणत्तो जहा मन्नयखेडे गंतूण कण्हरायं मोकल्लावेऊण पालित्ताभिहाणं सूरिं एत्थ सिग्घमाणेसुत्ति। तउ रन्ना पेसिओ तत्थ गंतूण कण्हरायस्स समीवे नियसामिसमाइट्ठं सव्वं निवेएइ। तउ तेणावि राइणा हरिसनिब्भरेण सूरी नियपुरसंघजुओ नियपरिवारसमिओ पट्ठविओ। पत्तो य कमेण बाहिं पइट्ठाणपुरस्स। तउ संकरेण गंतूण राइणो सूरीणमागमणं जाणावियं। तउ राया हरिसियचित्तो हट्टसोहाइयं नयरे महूसवं काराऊण सपरिवारो सूरिसंमुहं जाव किल गमिस्सइ ताव एत्थावसरे राइणो समीवे विहप्फई नाम विउसो आगंतूण मच्छरवसा भणइ। जहा देव! अहं अज्जेवऽस्स सूरिस्स बुद्धिं परिक्खिस्स। तउ रन्ना भणिओ य परिक्खसु,ता तउ भणइ देव! तुम्ह परिवारे अत्थि एत्थ कोवि पुरिसो जो गच्छंतो आगच्छंतो य हत्थट्ठियाउ उदगाइभरियभायणाउ बिंदुमेत्तं पि न छड्डेइ रन्ना भणियं अत्थि हीरओ नाम थिरहत्थो नरो। जइ एवं ता एत्थ तं आकारह। आकारिऊण निवेण पयंसिओ सो विहप्फइस्स। तेणावि सबहुमाणं सो पयत्तेण सम्माणिऊण भणिओ भो भद्द! तुममिणं विलीणघयपूरियं वट्टयं सूरिस्स गंतूण दंससु, इयं च भणेज्जसु जहा तुम्ह मंगलकए इमं विउसेहिं पेसियं। एवं भणिय सो सिग्घं पेसिओ। तेण तहेव कयं ति। तउ वियड्डत्तणउ सूरिस्स तस्स परमत्थो तेण विन्नाओ, जहा मे मइ-

परिक्खणत्थं विउसेहिं एवं कयं ति। तत्थ वट्टयवट्टलागारतुल्लं नयरमेयं। तं च घयतुल्लेण पंडियजणेण परिपुन्नं। तउ जहा एत्थ वट्टए अन्नस्स वत्थुस्स कस्सइ अवगासो नत्थि तहा विउसजणपुन्ने एयंमि नयरे तुज्झवि नो भविस्सइ, तउ दायगपडिदायणत्थं सुमरेवि एयंमि सूरितुल्लो विउसो नियसुहसंवेहगाइगुणत्तणाउ संमाइ त्ति चिंतिऊण सूरिणा साहुसयासाउ सूइं सुहुमतरिमभिगहिय तम्मज्झे धारिणिविज्जाए तं ठविऊण सो नरो वुत्तो। तेसिं विऊसाणं गंतूण एयं दंससुत्ति तेणावि तहट्ठियं नेऊण निवपुरउ तं मुक्कं, ततो मज्झे तं सूइं दट्ठुं विहप्फई नियमणे विसण्णो अहो! महामइमं एसो त्ति। तउ रन्ना नियनयरे पमुइएण महया वित्थडेण मो सूरी पवेसिओ। सपरिजणेण य रन्ना विसिट्ठपडिवत्ति(उ) संमाणिओ। निसुया य वहुमाणपुव्वं पालित्तयसूरिविरइया वहुकव्वरससंकिन्ना तरंगवइया कहा, विम्हिओ य तीए सवणेण सव्वो विउसयणो राया य। एत्थंतरे मच्छरवसा अवधारणासंपन्नो मइमं पंचालनामा विउसो जंपिउमारद्धो। देव! इयं कहा अणेण सूरिणा अन्नेहि य मम कव्वाउ य चोरिय त्ति। रन्ना भणियं कहमिणं नज्जइ। तउ तेण नियजुत्तीए रायाइलोयाणं पच्चयनिमित्तं अणेगभावेहि तरंगवइया कहा कविया। मणयं च संघो लज्जिओ। तउ सूरीहि संकेयं काऊण सहसा, मयगखेड्डं विहियं। एत्थंतरे मउत्ति काऊण कुक्कुहियाए पविट्ठो जाव वहि निज्जइ ताव सव्वो वि नयरजणो वहुतरा पसंसा करेइ। ततो जणमज्झट्ठिओ पच्छायावविहुरिओ वा विहुदंडं लब्भेऊण महयासद्देणं पंचालो इमं गाहं भणइ। जहा 'सीसं कह व न फुट्टं, जमस्स पालित्तयं हरंतस्स। जस्स मुहनिज्झराउ तरंगवइया नई छूढा' ॥१॥ तउ सूरिगुणुक्कट्ठिए सयलजणे इमं तब्भणियं सोऊण एवं जंपंतो झडित्ति उत्थिओ, भो भो पंचत्तमुवगओ वि अहं अणेण पंचालविउसस्स सच्चवयणेण ओसहतुल्लेण सुइसुवगएण जीविउ त्ति। तउ सो विमणदुम्मणो संघो य अइपहिट्ठमणो जाओ त्ति। इमं च रन्ना सोऊण सो पंचालो नि-

व्विसओ आणत्तो। सूरिणा य रायाणं भणिय उद्धरिओ। तउ सो संतारियबहुं दट्ठूण नियकम्मविवरदाणाउ तस्सेव समीवे सावग-धम्मं पवन्नो। अन्नया य केणइ वियड्ढेण सालिवाहणस्स रण्णो बीयनामेणं मुरुडनामस्स सभाए मयणोदयभावियं सुत्तं समप्पियं तस्स छेओ लहेयव्वो। न य सो केणावि लद्धो तउ रन्ना पालित्तयसूरी आहूओ, तं सुत्तं दरिसियं, तेण य उण्होदगमज्झे तं पक्खित्तं। तउ निम्मयणत्तणउ तस्स सो छेओ लद्धो। तउ समवट्टुलदंडो मूलजाणणत्थं तस्स नरवइणो सम्मप्पिओ। न य मूलं तस्स केणावि णायं सूरिणा पुण सो नीरमज्झे तराविओ। मणयं एगदिसाए सो नमिओ, ततो तेण तस्संतमूलं कहियं। पुणरवि समुग्गओ जउ-घोलिओ तस्स समप्पिओ जस्स ढक्कणयसंतिया संधी गुव्विलत्तणउ न नज्जइ। सो उण्होदए सूरिणा छूढो। तउ वियलिया जउक्कू-णयसंतिया संधी, या तेण नियमइमाहप्पेण पयंसिया। तउ सूरिणा तम्मइपरिक्खणत्थं तुंबयं फाडेऊण मज्झे रयणाइं पक्खिविय मट्ठाए सीवणीए तं सीवित्ता रन्नो दंसियं। भणिओ य राया इमस्स संधिं को वि जाणेउ त्ति। रन्नावि य तुम्बं सिव्वियं दंसियं न उण संधी तस्स विन्नाय त्ति। अहन्नया तस्स मुरुडरन्नो सिरो वेयणा तिव्वा पाउब्भूया, सा य नो कहवि विज्जामंततंताइएहिं उवसमिया। तउ रन्ना निओ मंती वुत्तो। जहा मज्झेमं सिरोपीडं पालित्तयसूरिसयामाउ गंतुमुवसामेसु। एत्थ व बो(आ)हरसुत्ति। तउ मंतिणा गंतूण सूरी भणिओ जहा तुब्भे रायसमीवे आगच्छह रन्नो महई सिरोवेयणा न केणावि उवसामिउं तीरइ त्ति। तउ सूरिणो मंति-वयणाउ तित्थस्स पभावणा भवउ त्ति मन्नमाणा रायसमीवे गंतूण उवविट्ठा। ते हि य तत्थ जहा लोगा न जाणन्ति तहा पाउरणस्स मज्झे पच्छन्नं मंतं झयंतेहिं नियदाहिणजाणुमत्थयपासेण दाहिणहत्थपएसिणीं अंगुठसमीववत्तिणीं अंगुली भामिऊण भामि-ऊण रायस्स सिरोवेयणा पणासिया। अण्णे भणंति सट्ठाणठिएहिं चेव जाणुवरि करंगुलिभामणेण तेहिं राया पउणीकउ त्ति। तहा

य नयरियमुद्दया इमा गाहा आगमे पढिज्जइ । 'जह जह पएसिणिं जाणुगमियालित्तउ भमाडेइ । तह तह से सिरवेयणा य, णस्सइ मुरुंडरायस्स' ॥१॥ तउ पणट्ठियसिरोवेयणेण राइणा अहिययरं परितुट्ठेण सूरिणो विउलेणं असणाइणा पडिलाभिया । अणुदियहं च दंसणभत्तीए समुज्जुओ जाओ । एवमणेगसो राया सूरिगुणावज्जियमाणसो संवुत्तो त्ति । एत्थऽन्ने पाडलिपुत्ते नयरे मुरंडो नाम राया मालियाइणाउ विभिन्नो होत्थ त्ति भणंति । एवं बहुहा पवयणुन्नइं विहेऊण कुन्देन्दुधवलजसेण तिहुयणं धवलीऊण दीहपज्जायं परिपालिऊण बहुविहे य सिस्से वायणाइणा निप्फाइऊण चूडामणिमाइनिमित्तसत्थाईहिं निययाउयपमाणं जाणिऊण संघसमक्खं आराहणापुव्वयं कालमासे कालं काऊण सूरी देवलोगं गउ त्ति । पसंगेण सव्वमेव भणियं । एत्थ पुणो रन्नो सिरोवेयणोवसमे भत्तपाणाइणा पडिलाभणमेत्तसरूवेण मंतपिंडेण चेव पगयं ।

तथा चूर्णपिण्डेऽन्तर्द्धानं प्रतीत्य चाणिक्यमंत्री निदर्शनं यथा—पाडलिपुत्तं नाम नयरं आसि । तत्थ य चंदगुत्तो नरवई तस्स य चाणक्को नाम महामंती । तत्थ य जंघाबलपरिहीणा संभूइविजयाभिहाणा सूरिणो परिवसंति । अण्णया य दुब्भिक्खं जायं । आयरिएहिं चिंतियं । जहा एयं सूरिपयजोग्गं नियसीसं आयरियत्तए ठाविउं सयलगच्छसहियं सुभिक्खे देसंतरे पट्ठवेमि । सयमेत्थेव एगागी चिट्ठामि ता ताव एयं जोणिपाहुडं सिक्खवेमि त्ति रहे तं सिक्खविउं पव्वत्ता । तत्थ य पच्छन्नठिएहिं दोहिं खुड्डएहिं अंजणं पढिज्जंतं सुयं । जेण अंजियाहि अच्छीहिं न केणइ दीसिज्जइ । आयरिएहिं तहेव आयरियत्तणे सो ठाविओ सयलगच्छसहिओ पेसिओ ते खुड्डया आयरियणेहेण पुणो वि वलिया, सेसो गच्छो निद्दिट्ठठाणे संपत्तो । गुरुहिं ते भणिया । दुट्ठु तुब्भेहिं कयं जे समागया संपयं एत्थेव संतोसनिरया संता विहरह । तउ सयमेव हिंडिऊण समुदाणट्ठा आयरिया जंकिंचि भिक्खाए आगच्छइ तं

तेहिं समं विरिंचिय भुंजंति त्ति तेसिं ओमोयरिया पवत्ता। दोहिवि मंतियं जहा किं आयरियाण ओमोयरियं करिमो। पुव्वसुयं अंजणं काउं चंदगुत्तेण सह भुंजामो त्ति तहेव भुंजिउमारद्धा। चंदगुत्तस्स ओमोयरियाए दुब्बलं जायं, चाणक्केण पुच्छियं, जहा देव ! किं दुब्बलो सि। तेण भणियं ओमोरिया हवइ। चाणक्केण चिंतियं जहा नूणं एयंमि दुब्भिक्खे अंजणसिद्धो कोइ अणेण सह भुंजइ। अन्नहा एवइएण आहारेण कहं ओमोरिया। तउ तेण अंजणसिद्धगहणत्थं भोयणमंडवे इट्टगचून्नो खिवाविओ। दिट्ठाणि तत्थ मणुयपयाणि निच्छइयं जहा अंजणसिद्धा दुवे एत्थागया चिट्ठंति। दुवारं पिहाविया। मज्झे धूमो कारिओ, नीहरिउमसक्कंताणं धूमेण नयणंसुएहिं सह विगयमंजणं। दो वि दिट्ठा। चंदगुत्तेण दुगंछा कया। जहा एएहिं विट्टालिओ अहं। चाणक्केण तस्स समाहाणनिमित्तं उड्डाहरक्खणत्थं च पसंसिओत्ति। जहा धन्नो सि तुमं जो रिसिकुमारेहि पवित्तीकउत्ति। वंदिउं विसज्जिया चाणक्केण आयरियकहणपुव्वयं ते उवालद्धा। जहा किमेवमुड्डाहं कुणह। आयरिएहिं सो चेव उवालद्धो। जहा तुमं चिय दोसवंतो जो दुण्हं पि खुड्डयाणं निव्वाहं न चिंतेसि, तेण तहत्ति पडिवन्नं, निव्वाहो अ कउत्ति। इह च विद्यादयो योगान्ता आहाराद्यर्थं न व्यापारणीया इत्युत्तरगाथायां वक्ष्यति। यतो विद्यादिषु व्यापार्यमाणेष्वमी दोषा यथा—यमुद्दिश्य विद्यादि प्रयुक्तं साधुना स भिक्षूपासकादिस्तत्पक्षपात्यन्यो वा भिक्षुकादिः साधुप्रयुक्तविद्याया नृपादिसमक्षं साधोः स्तम्भनमारणादि कुर्यात्। तथैते एवं व्यापारोपजीवनादधर्मिष्ठाः परवञ्चनाकारिणश्चेति प्रवचनोपघातः। तथा रुष्टो राजादिर्विद्यादिप्रयोक्तुः सर्वयतीनां वा वधं कुर्यादिति गाथार्थः ॥७२॥

अथ योगपिंडद्वारं योगलक्षणकथनद्वारेण व्याख्यातुमाह।

**सोहग्गदोहग्गकरा, पायपलेवाइणो य इह जोगा। पिंडट्ठमिमे दुट्ठा, जईण सुयवासिणमईण ॥७४॥**

व्याख्या—सौभाग्यदौर्भाग्यकरा जनप्रियत्वाप्रियत्वविधायकाश्चन्दनगन्धधूपादयो द्रव्यविशेषा योगाः स्युरिति योगः, तथाहि किञ्चिच्चन्दनादि जलादिना घृष्ट्वाऽभिमन्त्र्य च दुर्भगः पाय्यते, शरीरं वा अभिमन्त्रितधूपेन धूप्यते, गन्धा वा शिरसि निक्षिप्यते ततः सुभगः स्यादिति, एवं दुर्भगत्वेऽपि वाच्यं। तथा पादप्रलेपादयश्चरणखरण्टनप्रभृतय आकाशगमनजलाग्निस्तम्भादिफला द्रव्यसमूहक्षोदरूपा औषधविशेषाः, चः समुच्चये। इह जगति योगा योगशब्दवाच्याः स्युः। ननु चूर्णयोगयोर्द्वयोः क्षोदरूपत्वेऽपि परस्परं को विशेषः? उच्यते, देहस्य बहिरुपयोगी चूर्णो, बहिरन्तश्च योगो, यतोऽसावाहार्यानाहार्यभेदाद् द्विविधः स्यात्तत्र जलपानादिना अभ्यवहार्य आहार्यः, (तदितरोऽनाहार्यः) पादप्रलेपादि। तत्र पादप्रलेपरूपे योगपिण्डे आख्यानकं यथा—

आभीरविसए अयलउरं नाम नयरं आसि। तस्स आसण्णाउ कण्हाविन्नाभिहाणाउ दुवे नईउ। तासिं अंतरे बंभो नाम दीवो। तत्थ य पंचहिं तावससएहिं सहिओ एगो तावसकुलवई परिवसइ। सो य संकंताइपव्वेसु सतित्थुब्भावणाइनिमित्तं सव्वेहिं तावसेहिं सहिओ पायलेवेणं कन्हमुत्तरित्तु अयलउरं आगच्छइ। तत्थ लोगो आउट्टो भोयणाइसक्कारं करेइ। सावयाणं पुण खिंसं करेइ, जहा तुम्ह गुरूणं एयारिसी सत्ती नत्थि। सावएहिं वइरसामिणो माउलगाणं अज्जसमियायरियाणं अक्खियं, तेहिं भणियं य, थेवमेयं जं माइट्ठाणेण पायलेवं किचा सो नइं उत्तरइ। तउ सावएहिं तस्स माइट्ठाणपयडणत्थं सपरिवारस्स भोयणेण निमन्तणं कयं। गिहे उववेसिय पायधोयणं ढोइयं। तेन भणियं न धोवावेमि सावएहिं अधोविएहिं पाएहिं भुंजावन्ताण लोए अविणओ होइ त्ति भणंतेहिं बलावि धोइया पाया। भुंजाविओ य णियट्ठाण गमणाय चलिओ सावया य सरिसा चलिया। जाव कण्हं उत्तरइ ता सपरिवारो बुडिउं

लग्गो। एत्थंतरे बहुलोयसहियस्स पडिबोहणत्थं तत्थेवागया समियायरिया। चप्पुडियं दाउं भणियं कण्हे! परं पारं गन्तुमिच्छामि। झडत्ति मिलियाइ दोवि कुलाइ। विम्हिओ सपरिवारो कुलवई, तउ नयरजणसहिया तावसासमे गया, सूरिणा पारद्धा तत्थ धम्मकहा, लोगो पडिबोहिओ पंचसयसहिओ कुलवई वि पव्वज्जं गहिओ। सूरी गओ नयरं ति। जाया य बंभदिवगसाह त्ति। यद्यपीदं लौकिकयोगपिण्डे उदाहरणं, तथापीत्थं कृते यो लोकोत्तरेऽपि लभ्यते स योगपिण्ड इति विवक्षायां दर्शितम्। अथैते विद्यामन्त्रादयः किं सर्वदैव न प्रयोक्तव्या उत कदाचिदेवेत्याह 'पिंडट्ठमिमे दुट्ठत्ति' पिण्डार्थमाहारनिमित्तमुपलक्षणत्वादुपकरणादिग्रहः। इमे एते अनन्तरोक्ता विद्यामन्त्रचूर्णयोगा व्यापार्यमाणा इति शेषः दुष्टा दोषकारिणः स्युः सावद्यत्वेन कर्म्मबन्धहेतुत्वात्। इह पिण्डार्थमित्यनेन महति कुलगणसङ्घचैत्यादिकार्यपुष्टालम्बने व्यापार्यमाणा अपि न दोषाय स्युः प्रवचनोत्सर्प्पणाहेतुत्वेन जिनादिभिरनुज्ञातत्वादित्याचष्टे कथञ्चिद् दुष्टा (केषां) इत्याह यतीनां साधूनां कीदृशानामित्याह श्रुतवासितमतीनां उत्सर्गापवादबहुलागमपरिकर्मितबुद्धीनां। अनेन चागीतार्थ एव तुच्छत्वात् स्वल्पेऽपि कार्ये तद्व्यापारणं कुरुते न गीतार्थो गम्भीरत्वादित्यावेदयति। इह च पूर्वसंस्तवपश्चात्संस्तवाभ्यामेक एव संस्तवाख्यो दोष उक्तश्चूर्णयोगौ तु भिन्नौ द्वौ दोषावुक्तौ। क्वापि ग्रन्थे व्यत्ययो दृश्यत इति गाथार्थः ॥७४॥

उक्तं विद्यादिपिण्डद्वारचतुष्टयमथ मूलकर्मपिण्डद्वारमाह।

**मंगलमूलीण्हवणाइ गब्भवीवाहकरणघायाइ। भववणमूलकम्मंति मूलकम्मं महापावं ॥७५॥**

व्याख्या—मङ्गल्यमूलिका मङ्गलकृद्वनस्पत्यवयवस्वभावौषधयो लोकप्रतीतास्ताभिः स्नपनं, रुयादिजनस्य सौभाग्यपत्यादिनिमि-

यं मृत्तिकाकल्कमिश्रजले स्नानविधापनं,तदादिर्यस्य धूपनक(का)ण्डकरणादेस्तन्मङ्गलमूलिस्नपनादि । तथा गर्भविवाहकरणघातादि,तत्र गर्भ उदरान्तवर्त्ती मनुष्यादिसत्त्वः, विवाहः परिणयनं, तयोः प्रत्येकं करणघातौ विधापनविनाशौ, तावादिर्यस्य तत्तथा गर्भकरणं, गर्भघातस्तत्परिशाटनरूपः तथा विवाहकरणं विवाहप्रतिघातश्चेत्यर्थः । आदिशब्दात् स्त्रीणामक्षतयोनिक्षतयोनित्वकरणग्रहः । तत्रौषधप्रयोगेण सततमवाच्यदेशरक्तक्षरणं क्षतयोनित्वं तद्विपरीतमितरत्व(त्वं रक्त)स्यागम्यमानत्वात् । भक्ताद्यर्थं प्रति(क्रिय)माणं वा साधुना मूलकर्म्मोच्यत इति योगः । अस्य शब्दार्थनिरूपणायाह । 'भववणमूलकम्मंति' भवन्ति नारकादितयोत्पद्यन्तेऽस्मिन् जन्तव इति भवः संसारः, स एव वनमतिगहनत्वात्तरुखण्डरूपं काननं तस्य मूलं कारणं प्ररोहहेतुः कर्म्म ज्ञानावरणादिकर्म्मनिचयहेतुकाऽशुभा व्यापारक्रिया इति हेतोर्मूलकर्म्मोच्यते । यद्वा सूचनाद्विभक्तिलोपाच्च 'भववन'त्ति भववनस्पत्योः मूलं कारणं कर्म्म क्रिया इति कृत्वा मूलं च तत्कर्म च, मूलं वा प्रतीत्य कर्म्मेति विगृह्य मूलकर्म्मोच्यते । तत्र भवस्य मूलं कर्म्म तत्प्राप्तिनिबन्धना गर्भघातादिक्रिया तथा जातिविवक्षया वनस्पतेर्मूलं तत्प्ररोहकारणीभूतप्रविष्टोऽवयवस्तस्य औषधाद्यर्थं छेदादिक्रिया मूलकर्म्मेति । इदं च कीदृशमित्याह महापापं चिरकालवेद्यक्लिष्टाशुभकर्मनिबन्धनं शिष्टजननिन्द्यम् पापबहुलजनाचरणीयं चेति । अत एव भववनमूलमित्युक्तं । तत्र गर्भाधानशाटरूपे मूलकर्म्मणि राजपत्न्यौ दृष्टान्तो यथा—

वसंतपुरे जियसत्तू राया । तस्स दो देवीउ । अण्णया विसयसुहमणुहवंताणं एगाए गब्भो पाउब्भूओ । इयरी इमीए पुत्तो भविस्सइ न मज्झ त्ति ईसानलेन डज्झंती अधिईए चिट्ठइ । एत्थंतरे एगो साहू भिक्खं अडंतो तीए गिहे पविट्ठो । तेण भणिया जहा भद्दे ! किं विच्छायवयणा दीससि ? तीए वृत्तं जहा मम सवत्ती आवन्नसत्ता, पुत्तो तीए आइट्ठो नेमित्तिएणेति । तेण भणियं भद्दे ! ओसहप्पया-

णेण तुज्झवि गब्भाहाणं करिस्सामि मा अधीइं कुणसु। तीए भणियं भट्टारया! जइवि मे सुओ होही तुम्होसहप्पभावाउ तहवि सो पच्छासमुब्भूयगब्भजायत्तणेण कणिट्ठो त्ति न जुवराया भविस्सइ। इयरीए पुण पढमसमुब्भूयगब्भजायत्तणेण जेट्ठो त्ति जुवराया भविस्सइ। तउ साहुणा तीसे एक्कं ओसहं दिन्नं, अन्नं तीसे सयासाउ चेव इयरीए गब्भपाडणं दवावियं, दिन्ने जायं गब्भसाडणं, इयरीए य सुओ जाओ। जाओ य जुवराय त्ति। विवाहकरणरूपे तस्मिन् दृष्टान्तो यथा–

एगंमि कुले एगा वड्ढकुमारी अत्थि। तउ एगो साहू भिक्खमडंतो तम्मि गिहे पविट्ठो तं दट्ठूण पिंडलोभेण साहुदाणसीला तज्जणणी भणिया। जहा भद्दे! एसा दुहिया जोव्वणं पत्ता अपरिणीया संती केणावि सह अकज्जं समायरिय कुलं मइलिस्सइ। किं च लोए वि सुव्वइ जहा जइ कुमारी उच्चिट्ठा हवइ तो जत्तिया बिंदुणो रुहिरस्स नीहरंति तत्तियाउ वाराउ माया नरएसु वच्चइ त्ति। तदुक्तं लौकिकैः 'तावन्तो नरका घोरा, यावन्तो रुधिरबिन्दवः', इति। तउ सा परिणावियत्ति। तहा एगस्स कोडुंबियस्स पुत्तो अत्थि। पत्तो य सो जोव्वणं। इउय भिक्खापविट्ठेण एगेण साहुणा तं पुत्तं वयपत्तं पासिय तम्माया दाणप्पिया असणाइलोभेण भणिया। जहा कुलस्स गोत्तस्स कित्तीए संतईए य सुओ कारणं हवइ। तो एयं जुव्वणत्तपत्तं पि किं न परिणावेसि जेण कलत्तनेहेण थिरो थिओ चेट्ठइ। अपरिणाविओ पुण काएवि सच्छंदचारिणीए सह उड्डिउं गच्छिहिइ। किं च पच्छावि परिणावेयव्वो (तउ संपइवि किह न परिणावेसि? त्ति)। तउ तव्वयणाउ सो तीए परिणाविओ त्ति। अक्षतयोनित्वादिकरणरूपे तस्मिन् दृष्टान्तो यथा–

एगंमि नयरे एगस्स सेट्ठिस्स धूया भिन्नयोनिया अत्थि, माया तं च जाणइ न उण पिया, सा य तन्नयरवासिइब्भपुत्तस्स प-

रिणयणत्थं दिन्ना। आसन्नो आगओ वीवाहो। एसा मे दुहिया परिणिया समाणी भत्तुणा भिन्नयोनियत्ति जाणिय उज्झिज्झिहि त्ति चिंताए तन्माया अधिइमंता चिट्ठइ। एत्थंतरे भिक्खट्ठं भमन्तो एगो साहू भिक्खट्ठं तीसे गिहे पविट्ठो, दिट्ठा य सा, भणिया तेण जहा भद्दे! किमेरिसी दीससि। तीए दुहियावइयरो कहिओ। साहुणा आयमणोसहं पियणोसहं च दिन्नं अक्खयजोणिया जायत्ति। तहा एगाए नयरीए एगो सत्थवाहो आसि। तस्स य अन्नया नियभज्जाए समं रइकलहो जाओ। अउ अभिनिवेसवसा सत्थवाहेण तन्नयरनिवासिणो एगस्स सेट्ठिस्स धूया परिणयणत्थं वरिया। तं वइयरं परिजाणिय भज्जाए सत्थवाहो खमाविओ। वारिओ वि न चिट्ठइ सवत्तीचिंताए विद्दाणमुही सा चिट्ठइ। महाचिंता एसा इत्थीणं, भणियं जेण वरि दालिद्दिउ, वरि अणाहु, वरि वरुडुन्नालिउ, वरि रोगाउरु, वरि कुरूवु, वरि निग्गुणहालिउ वरि करचरणविहीणदेहु, वरि भिक्खभमंतउ ण पुणवि सवत्तिजुत्तुथइपति(जुत्तपति)संपत्तउ। एत्थंतरे जंघापरिजिओ एगो साहू तीसे गिहे भिक्खट्ठं पविट्ठो पुट्ठा य सा जहा भद्दे! किं अधिइंमता दीससि। तीए वुत्तं-'जो य न दुक्खं पत्तो, जो य न दुक्खस्स निग्गहसमत्थो। जो य न दुहिए दुहिओ न हु तस्स कहिज्जए दुक्खं'॥१॥ साहुणा वुत्त एवमेव नयरं 'अहयं दुक्खं पत्तो, अहयं दुक्खस्स निग्गहसमत्थो। अहयं दुहिए, दुहिओ ता मज्झ कहिज्जउ दुक्खं' ॥२॥ तउ तीए सवत्तीवइयरो कहिओ। साहुणा ओसहं समप्पियं। भणिया य एयं केणइ पओगेण तीसे भत्तस्स पाणस्स वा मज्झे दायव्वं जेण सा भिन्नजोणिया हवइ। तउ भिन्नजोणिया सा इइ भत्तुणो कहिज्जइत्ति सो न परिणेही। तीए तहेव कयं जाव भत्तुणा न परिणीयत्ति। विवाहघातरूपमप्यत्रैव जातमिति न पृथग् दृश्यते।

एतेषु च मूलकर्मरूपेषु स्नपनगर्भाधानतद्विनाशविवाहकरणतद्विघातादिषु पिण्डार्थं यतिना क्रियमाणेषु कार्यमाणेषु वा पड्जी·

वनिकायवधमैथुनप्रवृत्तिभोगान्तरायप्रद्वेषादयो दोषाः सञ्जायन्ते। तथाहि विवाहकरणरूपे तस्मिन् साधुना प्रवर्त्तकत्वेन पृथिव्यादयः काया विराध्यन्ते। अक्षतयोनित्वे, गर्भकरणरूपे च तस्मिन् यावज्जीवं मैथुनप्रवृत्त्या अधिकरणं यतोऽक्षतयोनित्वे सति पुरुषस्य सततं काम्या स्यात्तथा पुत्रोत्पत्तौ प्राय इष्टा स्यात्ततः काम्येति। यत उक्तं 'रतिपुत्रफला नारीति'। अक्षतयोनित्वगर्भकरणरूपे वा भत्रादिना ज्ञाते सति प्रद्वेषात्मविनाशप्रवचनखिंसादिकं स्यात्तथा क्षतयोनित्वे कृते यावज्जीवं परिहार्यत्वेन कामसेवाविघातकरणाद्भोगान्तरायोपार्ज्जनमिति गाथार्थः ॥७५॥

उक्तं मूलकर्म्मद्वारमधुनोद्गमोत्पादनादोषसङ्ख्याभणनेन समुदितगवेषणासंज्ञितदोषवृन्दस्य निगमनं ग्रहणैषणादोषप्रस्तावनां चाह

**इय वुत्ता सुत्ताउ, बत्तीस गवेसणेसणादोसे। गहणेसणदोसे दस, लेसेण भणामि ते य इमे ॥७६॥**

व्याख्या—इत्यमुना प्रदर्शितप्रकारेण उक्ता अभिहिता मयेति गम्यते। कुतः स्थानादुद्धृत्येत्याह सूत्रात् पिण्डनिर्युक्त्याद्यागमात्। क इत्याह उद्गमोत्पादनादोषषोडशकद्वयेन द्वात्रिंशत्सङ्ख्या, गवेषणैषणा दोषा इति। तत्र गवेषणं गवेषणा, अन्वेषणं एषणमेषणा, ततो गवेषणायामशनादेर्मार्ग्गणकाले एषणा उद्गमोत्पादनादिभिः सदोषत्वनिर्दोष(त्व)पर्यालोचनं गवेष(णैष)णा द्वात्रिंशद्दोषवृन्दरहिताहारान्वेषणमित्यर्थः। तद्विषया दोषा दूषणानि प्रदर्शितरूपा गवेष(णैष)णा दोषा उक्ता इति पूर्व्वेण योगः। इह किलैषणा त्रिविधोक्ता सूत्रे। यथा गवेषणा गहणैषणा ग्रासैषणा चेति। तत्रोद्गमोत्पादना(दोष)शुद्धाहारविषयाऽऽद्या, शङ्कितादिदोषशुद्धाहारविषया द्वितीया, संयोजनादिदोषपञ्चकरहिताहाराभ्यवहरणविषया तृतीयेति। तथा किल क्रमोपि त्रिविधाया अप्येवमेव यतो नाऽगवेषितस्याशनादेर्ग्रहणं स्यान्नचागृहीतस्य भोजनकरणं सम्भवतीति तदियथा(ता) ग्रन्थेनाद्याऽभिहिता, सांप्रतं द्वितीयां वक्तुमाह। ग्रहणेत्यादि

ग्रहणैषणादोषानिति। तत्र ग्रहीतिर्ग्रहणं एषणमेषणा। ततो ग्रहणेऽशनादेर्ग्रहणकाले एषणा शङ्कितादिभिः प्रकारैरन्वेषणं ग्रहणैषणा तद्विषया दोषा ग्रहणैषणादोषास्तान्, दशेति दशसङ्ख्यान् लेशेन सङ्क्षेपेण भणामि कथयामि। तत्प्रस्तावनामाह, ते च ते पुनः दोषा इमे एतेऽनन्तरमेव वक्ष्यमाणस्वरूपा इति गाथार्थः ॥७६॥

तानेव यथानामग्राहमाह।

**संकियमक्खियनिक्खित्त–पिहियसाहरियदायगुम्मीसे। अपरिणयलित्तछड्डिय, एसणदोसा दस हवंति॥**

व्याख्या—'संकिय'त्ति विभक्तिलोपाच्छङ्कितं सम्भाविताधाकर्म्मादिदोषं भक्तादि। एवमुत्तरत्रापि। मिश्रं मुक्त्वा शेषपदेषु विभक्तिलोपो दृश्यः। तथा दोषवतो निर्देशेपि दोषदोषवतोरभेदाच्छङ्कारूप एषणादोष उक्तोऽवसेयस्तस्यैव विवक्षितत्वादेवं सर्वत्र। म्रक्षितमारुषितं। निक्षिप्तं न्यस्तं। पिहितं स्थगितं, संहृतमन्यत्र क्षिप्तं। 'दायग'त्ति सूचनाद्दायकदुष्टं। 'उम्मीसे' त्ति उन्मिश्रं पुष्पादि-मिलितं, अपरिणतमप्रासुकीभूतादि। लिप्तं दुग्धादिखरण्टितं, छर्दितं परिसाटिमत्, समुच्चयार्थश्चकारो लुप्तो दृश्यः। इतेर्लोपादित्येवमेते एषणादोषाः पिण्टग्रहणदूषणानि। दशेतिसङ्ख्या भवन्ति जायन्ते इति गाथार्थः ॥७७॥

अथ शङ्कितद्वारं व्याख्यातुमाह।

**संकियगहणे भोए चउभंगो तत्थ दुचरिमा सुद्धा। जं संकइ तं पावइ दोसं सेसेसु कम्माई ॥७८॥**

व्याख्या–शङ्कितस्य (सं)भाविताधाकर्म्मादिदोषस्य भक्तादेर्ग्रहणे आदाने, तथा भोगो भोजनं शङ्कितस्येत्यत्रापि योज्यं। चशब्दः समुच्चयार्थो लुप्तो दृश्योऽत्र पदद्वये 'चउभंगो' त्ति चतूरूपो भङ्गः चतुर्भङ्गो भङ्गचतुष्टयं स्याद्यथा ग्रहणे भोजने च शङ्कितः भक्ता-

देर्ग्रहणकाले भोजनकाले च यदि पुनरमुकदोषवदिदमिति शङ्कावानित्यर्थः। तथा ग्रहणे शङ्कितो न भोजने २ भोजने शङ्कितो न ग्रहणे ३ न ग्रहणे न भोजने च शङ्कित ४ इति। एतेषां चैवं सम्भवो यथा–किल क्वापि गृहे भिक्षार्थं प्रविष्टः साधुः प्रचुरां भिक्षां भिक्षाचरेभ्यः स्वस्मै वा गृहस्थेन दीयमानां दृष्ट्वा चिन्तयति, यथेयं भिक्षा किं स्वगृहार्थं प्रचुरोपस्करतया गृहिणैतेभ्यो मह्यं वा प्रचुरा दीयते, उत भिक्षाचरादिनिमित्तराद्धतयेति चेतसि शङ्कितस्ततः केनापि लज्जासंक्षोभादिना कारणेन किं निमित्तमेतत् प्रचुरं राद्धमिति गृहिणं प्रश्नयितुमशक्नुवन् शङ्कितो गृह्णाति। गृहीत्वा च स्वस्थानमागत्य तथैव शङ्कितस्तद्भुङ्क्ते इति प्रथमः १। तथा भिक्षार्थं गृहं गतः प्रचुरां भिक्षां लभ्यमानां दृष्ट्वा चेतसि शङ्कितस्ततो लज्जादिना निषेधयितुं तां प्रश्नयितुं वा गृहस्थमशक्नुवन् गृहीत्वा स्वोपाश्रये समागतस्ततो भोजनसमये तं दोलायमानचेतसं दृष्ट्वाऽपरसाधुस्तद्भिक्षानिःशङ्कीकृतग्राही तदभिप्रायं ज्ञात्वा वदति। यथा साधो! यत्र बह्वी त्वया भिक्षा लब्धा, तत्र तद्गृहे प्रकरणं प्रवर्त्तते लाहणकं वा समायातमित्येवं तद्वचः श्रुत्वा शुद्धमेतदिति निश्चित्य विगतशङ्कापरिणामस्तद्भुङ्क्ते इति द्वितीयः २। तथा कश्चित्साधुरीश्वरगृहान्निःशङ्कितः प्रचुरां भिक्षां गृहीत्वा वसतावायातोऽन्यान् साधून् गुरोः पुरतः स्वभिक्षातुल्यभिक्षामालोचयतः श्रुत्वा सञ्जातशङ्कया चिन्तयति यथा यत्स्वरूपा बह्वी मया भिक्षा लब्धा अमुकस्मिन् गृहेऽन्यैरपि साधुभिस्तत्र तत्स्वरूपैव बह्वी च लब्धा ततो मा कदाचिदियमशुद्धा भविष्यतीति, ततस्तथैवासौ शङ्कितचित्तस्तां भुङ्क्ते इति तृतीयश्चतुर्थभङ्गस्तु सम्भवं प्रतीत्य सुगम एवेति। अत्र चतुर्ष्वपि शुद्ध्यशुद्धिमाह। तत्र तेषु चतुर्षु भङ्गेषु मध्ये द्वितीयश्चरमश्च तीयलोपात् द्विचरमौ द्वितीयचतुर्थौ भङ्गौ वा शुद्धावशुद्धाहारदोषायातकर्म्मबन्धदोषविकलौ। चरमस्तावदुभयथापि शङ्काया अभावाच्छुद्ध एव। द्वितीयोऽपि भङ्गो ग्रहणापेक्षयैव सदोषः परमार्थतस्तूत्तरशुभपरिणामेन शङ्कितग्रहणदोषस्य निवर्त्तित्वाच्छुद्ध एव।

तृतीयो बहुतरदोषः। आद्यश्च बहुतमदोषः, उभयत्रापि भोजनस्य शङ्कितत्वेनाऽशुद्धत्वात्। अथ तृतीयप्रथमावाश्रित्याशुद्धतामाह। यं कञ्चन दोषं 'कम्माइ' त्ति सूचनादाधाकर्म्मादिकं दूषणं। भक्तादेर्ग्रहणकालेऽभ्यवहारकाले वा शङ्कते अमुकदोषदुष्टमिदमशनादीत्या-रेकते सम्भावयतीत्यर्थः। तमेव दोषं, व्याख्यानादाधाकर्म्मादिपञ्चविंशतिदोषमध्यादेकतरं कञ्चन पिण्डग्राही साधुः प्राप्नोति आप-द्यते शेषयोरुद्धरितयोराद्यतृतीयभङ्गयोरित्यशुद्धावेताविति। तत्राधाकर्म्मादयः षोडशोद्गमदोषाः शङ्कितस्य साध्यत्वात्तद्वर्ज्जा नवैषणा-दोषा म्रक्षितादयश्चेति समुचिताः पञ्चविंशतिः। अत्र हि ननु यदि शङ्काऽकल्पनीयताविधायिनी, एवं शुद्धमपि भक्ताद्यशुद्धं स्यात् शङ्काकरणात्, अशुद्धमपि शुद्धमेतदिति निश्चित्य गृहीतं शुद्धं स्यादित्यत्रोच्यते, सत्यमेव तच्छङ्कापरिणाम एव शुद्धेरशुद्धेश्च कार-णम्। यदि हि शङ्कायुक्तपरिणामस्तदा शुद्धमप्यशनादिकमशुद्धं करोति। शुद्धमेतदित्येवं निश्चित्य गृह्णन् भुञ्जानो वा विशुद्धपरिणा-मोऽशुद्धमपि शुद्धं करोति। तदिहाशुद्धमपि छद्मस्थपरीक्षया निःशङ्कीकृतं शुद्धमेव स्यात्तथाहि श्रुतबलेनामायाविना प्रयत्नपरेण छद्म-स्थेन संशोध्य यद्गृहीतं तदशुद्धमपि तेनानीतं केवल्यप्युपभुङ्क्ते इतरथा श्रुताप्रामाण्यं कृतं स्यात्तदप्रामाण्ये तद्दर्शितज्ञानादित्रयाभाव-स्तदभावे ज्ञानादित्रयसाध्यमोक्षाभावस्तदभावे तदर्थं गृह्यमाणाया दीक्षायाश्च नैष्फल्यमिति गाथार्थः ॥७८॥

उक्तं शङ्कितद्वारमथ म्रक्षितद्वारमाह।

**सच्चित्ताचित्तमक्खियं दुहा तत्थ भूदगवणेहिं। तिविहं पढमं बीयं गरहियइयरेहिं दुविहं तु ॥७९॥**

व्याख्या—सह चित्तेन चैतन्येन वर्त्तत इति सचित्तः सजीवः पृथिव्यादिः, चकारस्य द्विरुक्तिः सूत्रे प्राकृतलक्षणाद्, यद्वा सद्विद्यमानं चित्तं यस्य स सचित्तः। तथा अचित्तो निर्जीवः पृथिव्यादिरेव। इह च पृथिव्यादिः पूर्वं सचित्तः स्यात्ततः स्वकाय-

शस्त्रादिभिः प्रासुकीक्रियमाणः कियन्तमपि कालं मिश्रः, स जीवाजीवरूपस्ततोऽचित्त इत्ययं क्रमः। परमत्र मिश्रस्य भेदेनाऽविवक्षणाच्च तदुपादानं। अत्र च शिष्यहितार्थं सचित्तादिस्वरूपं किञ्चिदुच्यते। तत्र स्वकायशस्त्रादिनाऽविध्वस्तरूपः पृथिव्यादिः सचित्तः। परिणतापरिणतरूपश्च मिश्रः। तथा लवणमृत्तिकादिरूपः पृथ्वीकायः स्वकायपरकायशस्त्रोपहतोऽचेतन इति। तत्र मधुरपृथ्वीकायस्य मृत्तिकादेः क्षारलवणोषादिः स्वकायशस्त्रं, शीतोष्णाग्निकाञ्जिकसर्जिकातैलादिकं च तस्य परकायशस्त्रं। तथाऽप्काये क्षारादिरप्कायो मधुरादेः स्वकायशस्त्रं पृथ्वीकायादिषु तस्य सर्व्वस्यापि परकायशस्त्रं। वनस्पतिस्तु कन्दादिः सचित्तः स्वकायपरकायशस्त्रेण छेदेन पचनाद्दिना च विध्वस्तोऽचित्तस्तथावृन्ते शुष्के कोमलाम्रादीनि फलानि व्रीहिकादीनि हरितानि पत्रपुष्पाणि वाऽचित्तानि स्युरिति अलं प्रसङ्गेन। प्रकृतमुच्यते। तदिह सचित्तपृथिव्यादिम्रक्षितयोगात्करमात्रं देयमपि च सचित्तं अचित्तयोगादचित्तं ततः सचित्तं चाऽचित्तं च सचित्ताऽचित्तं। सचित्तम्रक्षितमचित्तम्रक्षितं चेत्यर्थः। इतेर्लोपादित्येवं सचित्ताचित्तभेदान्म्रक्षितं पृथिव्यादिना खरण्टितं भक्तादि द्विधा द्विविधं भवति मिश्रस्य भेदेनाविवक्षणात्। तत्र तस्मिन् द्विविधे म्रक्षिते प्रथममाद्यं सचित्तम्रक्षितं त्रिविधं त्रिधा स्यात्। कैरित्याह 'भूदगवणेहिं'ति पृथिव्यब्वनस्पतिभिः प्रस्तावात् सचित्तैः पृथ्वीकायम्रक्षितमित्यादीनि तत्त्वं। 'वीयं'ति, द्वितीयमचित्तम्रक्षितं पुनर्द्विविधमेव द्विप्रकारमेव भवति। तुशब्दस्यैवकारार्थत्वात्। काभ्यामित्याह गर्हितेतराभ्यामिति तत्र गर्हितं लोकनिन्द्यं वस्तु इतरमगर्हितं लोकानिन्द्यं ताभ्यां द्रव्याभ्यामचेतनाभ्यां गर्हितवस्तुम्रक्षितमगर्हितवस्तुम्रक्षितं चेत्यर्थ इति गाथार्थः ॥७९॥

अधुना अचित्तम्रक्षितं चाश्रित्य कल्प्याकल्प्यविधिमाह।

**संसत्तअचित्तेहिं, लोगागमगरिहिएहि य जईण। सुक्कल्लसचित्ते हिं य, करमत्तं मक्खियमकप्पं ॥८०॥**

व्याख्या—इह प्रत्यासत्तिन्यायादचित्तम्रक्षितस्यैव च सर्व्वदैव मुख्यतया ग्रहणाच्च पूर्वं सचित्तम्रक्षितस्य क्रमपरिहारेणाऽक-ल्पतोक्ता। पश्चादितरस्येति। तत्र संसक्तिर्मध्योत्पन्नैकेन्द्रियादिसत्त्वयुक्तत्वं। सा विद्यते येषां द्रव्याणां तानि मत्वर्थीये संसक्तानि, तानि च अचित्तानि च दधितक्रद्राक्षापानकादीनि। एतेषु मात्रकादेः खरण्टनतयापि जातेषु कदाचित् संसक्तिः स्यात्तानि संसक्ताचित्तानि तैः अगर्हितैरपीति शेषः। करमात्रं म्रक्षितमकल्प्यमित्युत्तरेण योगः। अयमर्थः संसक्तिमद्द्रव्यैर्दध्यादिभि-र्लिप्तहस्तमात्राभ्यां म्रक्षिताभ्यां देयं वा साक्षादेतैर्म्रक्षितं सद्दीयमानमकल्प्यमेकेन्द्रियादिवधदोषात् मात्रकादिलग्न-गर्हितवस्तुम्रक्षितमाह। लोकागमगर्हितैश्चेति। तत्र लोकः पृथग्जनः 'आगम'ति अर्हत्प्रवचनं तदध्येता वा लोकोत्तरो यतिजनस्ततो लोकश्चागमश्च तौ, तथा च तयोर्मध्ये गर्हितानि निन्द्यानि यानि सचित्तवस्तूनि मांसादीनि तैः, चः समुच्चये। यतीनां साधूनां करमात्रं म्रक्षितमकल्प्यमितीह सम्बन्धनीयं। अयमर्थः लोक-लोकोत्तरागमगर्हितमांसवसाशोणितसुरामूत्रोच्चारादिभिः शिष्टजनस्याभक्ष्यापेयैः साक्षान्म्रक्षितं सदेतैर्म्रक्षिताभ्यां वा हस्तमात्राभ्यां दीयमानं सद्देयं यतीनामकल्प्यमुड्डाहादिदोषात्। इह चाचेतनद्रव्यैर्म्रक्षितयोर्हस्तमात्रयोश्चतुर्भङ्गः स्यात्तद्यथा हस्तो म्रक्षितो मात्रं च, हस्तो म्रक्षितो न मात्रं। मात्रं म्रक्षितं न हस्तो, न हस्तो म्रक्षितो न मात्रमिति। तत्र गर्हितवस्तुम्रक्षितत्वे भङ्गचतुष्टयेऽपि भक्ताद्य-कल्प्यं संसक्तिमदादिद्रव्यवर्जागर्हिततमाद्यचित्तवस्तुम्रक्षितत्वे कल्प्यमिति। अधुना सचित्तपृथिव्यादिभिर्म्रक्षिते हस्तमात्रके आश्रित्य सचित्तम्रक्षितदेयस्याकल्प्यतामाह। शुष्कार्द्रसचित्तैश्चेति तत्र शुष्का अनार्द्राः आर्द्राश्चेषत्सजलाः सचित्ताः सजीवास्ततः शुष्काश्चार्द्राश्च ते सचित्ताश्चेति विग्रहस्तैः पृथिव्यब्वनस्पतिभिरिति सामर्थ्याद् दृश्यम्। चः प्रकृतवाक्यापेक्षया समुच्चये। करमात्रं दातृहस्तकरो

टिकादिकं अक्षितमालिप्तं खरण्टितमिति यावत्। उभयमन्यतरद्वा उपलक्षणत्वात् साक्षादेव द्रव्यं वा किमित्याह। अकल्प्यं यतीनां ग्रहणायानुचितं। कोऽर्थः सचित्तैः पृथिव्यादिभिः करमात्राभ्यां अक्षिताभ्यां दीयमानं शुद्धमपि देयं तदेव वा तैर्म्रक्षितं सद् गृहीतुं न कल्पत इत्यर्थः। अयमत्र भावार्थः पृथिव्यब्वनस्पतिभिः सचित्तैर्म्रक्षितत्वभावात्त्रिधा सचित्तम्रक्षितमुक्तं। तत्र पृथ्वीकायः शुष्कार्द्रभेदात् द्विधा। तत्र शुष्को भस्मवत् श्लक्ष्णतया यस्तेन, यद्वाऽऽर्द्रेण सचित्तमृदा यत्करादि खरण्टितं तत्पृथ्वीकायम्रक्षितं स्यात्। तथा पुरःकर्मपश्चात्कर्मसस्निग्धोदकार्द्रभेदादप्कायम्रक्षितं चतुर्द्धा। तत्पुरो भक्तादेर्दानात्पूर्व्वं पश्चात्तस्यैव दानादुपरि तयोः कर्म्म साध्वर्थं जलेन हस्तादेर्धावनं तत्पुरःकर्म पश्चात्कर्म चेत्यर्थः। सस्निग्धमीषल्लक्ष्यमाणखरण्टनजलं हस्तादि, उदकार्द्रं जलतीमितं हस्ताद्येव। तथा प्रत्येकानन्तकायिनामाम्रादिसूरणादीनां श्लक्ष्णखण्डैरपरिणतत्वात् सचित्तैर्हस्तादि यत्खरण्टितं तद्वनस्पतिम्रक्षितं तेजोवायुत्रसैश्च म्रक्षितं न भवति। यतः श्लक्ष्णतार्द्रताभ्यां म्रक्षितत्वं स्यात्। ते च श्लक्ष्णतासजलते एतेषु न स्तः। यद्यपि तेजःकाये आर्द्रता नास्त्येव श्लक्ष्णता त्वस्ति परं तथापि सा भस्माद्यचेतनावस्थायामिति भावनीयं। इहापि सचित्तैः पृथिव्यब्वनस्पतिभिः खरण्टितयोर्हस्तकयोश्चतुर्भङ्गः स्याद्यथा हस्तो म्रक्षितो मात्रकं चेत्यादि। अत्र चाद्यभङ्गत्रये भक्ताद्यकल्प्यं चतुर्थे च निर्दोषत्वात् कल्पते इति गाथार्थः ॥८०॥

उक्तं म्रक्षितद्वारमथ निक्षिप्तद्वारमाह।

**पुढविदगअगणिपवणे परित्तणंते वणे तसेसुं च। निक्खित्तमचित्तं पिहु अणंतरपरंपरमगेज्झं ॥८१॥**

व्याख्या—इह सर्वत्र सूचनाद्विभक्तिलोपाच्च 'पुढवि'त्ति पृथ्वीकायो मृत्तिकालवणोषतूवरकादिरूपस्तस्मिन्। तथा 'दग'त्ति

उदकमप्काय इत्यर्थः स चावटनद्यादिजलावश्यायहिमकरकादिरूपस्तस्मिन्। तथा 'अगणि'त्ति अग्निस्तेजस्कायः स च विध्यातमुर्मुराङ्गाराप्राप्तप्राप्तज्वालसमज्वालव्युत्क्रान्तभेदतया सप्तविधस्तस्मिन्। तत्र यः स्वल्पतया पूर्वं दृष्टया न दृश्यतेऽग्निः पश्चाच्छुष्कगोमयचूर्णादिके इन्धने तदुपरि क्षिप्ते वर्धमानो दृष्टया दृश्यते स विध्यात इत्युच्यते। ये च ईषत् पिङ्गलाग्निकणा अर्द्धविध्यातभस्मोन्मिश्रास्ते मुर्मुर इत्युच्यन्ते। यश्च ज्वालारहितो निर्धूमोऽग्निः सोऽङ्गार इत्यभिधीयते। यत्र च चुल्यामग्नौ प्रज्वालिते पिठरादिके चारोपिते यावज्ज्वाला पीठरे न लगति तावदसावप्राप्तज्वाल उच्यते। यदा च पीठरे ज्वाला लग्ना तदाऽसौ प्राप्तज्वाल उच्यते। यदा च ज्वालैवानीचोच्चत्वेन पिठरकसमा, पिठरकमुखान्ते ज्वालान्तो लग्न इत्यर्थः, तदाऽसौ समज्वाल उच्यते। यदा च पिठरमुखमुल्लङ्घ्य ज्वालोर्ध्वं प्रव्रजति तदाऽसौ व्युत्क्रान्त इत्यभिधीयते। 'पवणे'ति पवनो वातो वायुकाय इत्यर्थः। स च गुञ्जावातमण्डलिकादिभेदादनेकरूपो दृतिस्थश्च तस्मिन्, तत्र तावदचित्तमुखवातपूरिते सति दृतरकपद्ममुखे यस्तस्थो वायुः स कालमाश्रित्य सचित्तो मिश्रोऽचित्तश्च पौरुषीदीनैः स्यात्। तत्र वर्षाहिमन्तग्रीष्मरूपस्त्रिरूपो कालः सामान्येन स्निग्धो रूक्षश्च भवति। तत्र स्निग्धः शीतो रूक्षश्चोष्णः। अयं च स्निग्धोऽप्युत्कृष्टमध्यमजघन्यभेदात्त्रिधा। रूक्षोऽपि च त्रिधा। तथा उत्कृष्टस्निग्धोऽतिशीतः, मध्यमस्निग्धो नातिशीतः। जघन्यस्निग्धः स्तोकशीतः। जघन्यरूक्षः किञ्चिदुष्णः, मध्यमरूक्षो नात्युष्णः, उत्कृष्टरूक्षोऽत्युष्णः। तत्र च दृतिस्थो वायुरतिस्निग्धकाले पौरुषीमेकामचेतनो, द्वितीयायां मिश्रः तृतीयायां सचित्त इति। मध्यमस्निग्धो द्वे पौरुष्यावचित्तस्तृतीयायां मिश्रश्चतुर्थ्यां सचित्तः। जघन्यस्निग्धः पौरुषीत्रिकमचित्तः चतुर्थ्यां मिश्रः, पञ्चम्यां सचित्तः। रूक्षकाले पौरुषीनां स्थाने दिनानि। पौरुषीवृद्धिस्थाने च दिन-

